आत्मा। तवश्यावीयसाम्नः प्रजापतिर्विश्वामित्रो गायत्री सविता। सन्त्वाभूतानीति विश्वदेवास्त्रिष्टुबादित्यः। उर्वीचित्रं देवानाम-न्तश्चरति आदित्यस्त्रिष्टुप् गायत्री सूर्यः। उत्तरयोरादित्यो गायत्री सूर्यः। उदुत्यं चित्रमित्यनीपङ्क्त्य सूर्यस्त्रिष्टुप् गायत्री सूर्यः। सधस्थस्य इन्द्रोऽनुष्टुप् सूर्यः। मरुतां भूतेर्मरुतो गायत्री सूर्यः। सार्पराज्ञीनां प्रजापतिर्गायत्री सूर्यः। घर्मरोचनस्येन्द्रो ऽनुष्टुप् सूर्यः। परिधीनामिन्द्रो गायत्री सूर्यः। ऋतुसाम्न ऋतवोऽनुष्टुप् सूर्यः। चक्षुःसाम्नो मित्रावरुणौ गायत्री सूर्यः। श्रोत्रसाम्नो मित्रावरुणौ त्रिष्टुप् गायत्री सूर्यः। शिरःसाम्न इन्द्रो गायत्रीत्रिष्टुभौ सूर्यः। जपे विनियोगः॥

२१ २ ३२ २२ २२ २२ १ २ २
भासम्॥ हाउ २ हाउ। ओहा।२। ओ हायि। इ हौहो।३।
१ १ १ १ १ २ २ १ २ १
इहियो।३। हुम्।३। हो।३। हः२।३। इडा।३। ऋतं मे।३। हम्।३।
२ १ २ २ १२ १ १ २ २ २ २ २
प्रक्षस्य वृष्णो अरुषस्य नूवा २३ हाः। प्रनोवचो विदथा जात
१२ २ १२ २ २ २ १२ २ १२
वेदा २३ साः। वैश्वानराय मतिर्नव्यसेशु २३ चीः। सोम इव
२ २ २ १ २ २२ २ ३२ २२ ३२ २२
पवते चारुरग्ना २३ या ३ यि। हाउ २ हाउ। ओहा।२। ओहायि।
१ २ २ २ १ १ १ १ १ २ २ १ २
इहौहो।३। इहियो।३। हुम्।३। हो।३। हः।३। इडा।३। ऋतं मे
१ १ १२ २ १ २ २ १ २ २२
।३। हम्।२। हा २३४। औ होवा। इहौहो। भद्रम्। इहौहो।
१२ २ १ २ २२ २ १ २ २२ १ २ १ २ २२ १
श्रेयः। इहौहो। वामम्। इहौहो। वरम्। इहौहो। सुवम्।
२ २२ १ २ १ २ २२ १ २ २२ १ २ २२ १२ २ २
इहौहो। अस्ति। इहौहो। अभ्राजीत्। इहौहो। ज्योतिः। अभ्रा-
२ १ २ २२ १२ २ १ २ २ २ १ १ १ १
जीत्। इहौहो। दीदिवः। ए २३। हिया हाउवा ३। भा २३४५
म॥ १॥

दशस्तोभम् ।। हाउ २ हाउ । ओहा ।२। ओहा । हाओवा ।३। ऊ
२।३। ओ २।३। हाउ वाक् ।३। आयुर्यन् ।३। ए आयुः ।३। आयुः
।३। वयाः ।२। वयः । इन्द्रन्नरो नेमधिताहवा २ न्तायि । यत्पा-
यायुनजतेधिया २ स्ताः । शूरो नृषाताश्रवसश्चका २ माइ । आगो-
मति व्रजेभ जातुवा २ न्नाः । हाउ २ हाउ । ओहा । २ । ओहा ।
हाओवा ।३। उ२।३। ओ २।३। हाउ वाक् ।३। आयुर्यन् ।३। ए
आयुः ।३। आयुः ।३। वयाः ।२। वा २। या २३४। औहोवा ।
ए । आयुर्द्धा अस्मभ्यं वर्चोधा देवेभ्या २३४५ः ।। २ ।।

उन्नयम् ।। उन्नयामि । होयि ।३। आदित्यं माञ्चं यंत मुन्न-
यामि । होइ ।३। अहोरात्राण्परित्राणि । होयि ।३। द्यौनौहोउ ।३।
तस्य। मसावादित्य ईयते हाउ ।३। तस्मिन्वयमीयमान ईयामहे हाउ
।३। इयामहे हाउ ।२। ईयामहे ३। हाउवा । प्रियेधाम९ स्त्रिय-
क्षरे ।२। प्रियेधाम९ स्त्रियक्षरे २३४५ ।। ३ ।।

गायत्री सामौशनम् ।। प्रेष्ठंवाः । अता २३ यिथीम् ।
स्तौषे मित्रम् । इव प्रा २३ याम् । अग्नायि र। ३ था ३ म् ।
नावा २३ हा २४३यि । दा २३४यो ६ हायि ।। ४ ।।

शुद्धाशुद्धीये ।। एतोन्विन्द्र९ स्तवा मा । शुद्ध९ शुद्धेनसा
२३ म्ना ।शुद्धैरुक्थैर्वा वृध्वा २३९ साम् । शुद्धैरा२३शी ३। र्वा

२ नु । ममा ३४ औहोवा । तू २३४५ ॥ ५ ॥

एतोन्विन्द्रꣳस्तवा ५ मा । शुद्धꣳ शुद्धे । न । साम्ना२। शुद्धा-
इ५ ३ वथा ३ इः । वावा२ध्वाँ २३४ꣳ साम् । शुद्धैरा २३
शी । वान्मिमत्तु । इडा २३ भा ३४३ । ओ २३४५ इ । डा ॥६॥

राजनम् ॥ हुम् ।३। हो ।३। हꣳ ।३। ओ हा ।३। औहोयि
।२। औहोयि । इन्द्रन्नरो । ने ३ मधि । ताहवन्तायि ।३। वयो
वृहत् ।३। विभ्राष्टये विधर्मणे ।३। यत्पारिया । युन ।। तायिधि-
यस्ताः ।३। सत्यमोजः ।३। रजः सुवः ।३। शूरोन्नृषा । ता ३
श्रव । सश्वकामायि ।३। भद्रꣳ सुधा ।२। भद्रꣳ सुधे । षमूर्जम् ।
इषमूर्जम् ।२। आगोमतायि । व्रजेभ । जातुवन्नाः ।३। बृहद्यशः
।३। दिविदधे ३ हस् ।२। दिविदधे ३। हाउवा । वागीडा सूवो
बृहज्ज्ञा २३४५ः ॥ ७ ॥

रौहिणम् ॥ हाउ ।३। आयिही ।३। आयिहिया ।३। आ-
साउ ।३। आयाम् ।३। नामाः ।३। किट् ।२। इन्द्रन्नरो नेमधि-
ताहवा २ न्तायि । यत्पार्यायुनजते धिया २ स्ताः । शूरोन्नृषा
ताश्रवसश्वका २ मायि । आगोमति व्रजेभ जातुवा २ न्नाः ।
मन। २३ होयि । प्राणा २३ होयि । चक्षू २३ होयि । श्रोत्रा

१ २ १ १ २
२३४ होयि । घोषा २३ होयि । व्रता २३४ होयि । भूता २३४
१ २ १ १ १ २
होयि । पाना २३४ होयि । चित्ता २३४ होयि । धीता २३४
१ १ १ २ ^ ३ ५२ १
होयि । सुवा २३ होंयि । ज्योता २३ इहों २। वा २३४ औहोवा ।
३ १ १ १ १
ऊ २३४५ ॥ ८ ॥

२१ २ २ २ २ २ ११ २
बृहत् ॥ औहोयि त्वामिद्धि हवामहा ३ ए । साता वाजा ।
^
२ ३ ५ १ २ ३१ ४१ ५ २ १
स्याकारा २३४ वाः । तुवा ३४ । औहोवा । वृत्राइ षुवाइ ।
^
२ २ ३ ५ ३१ २ २ ३१ ४१ ५
द्रासा ३१ त् । पतिन्ना २३४ राः । त्वां काष्ठा ३४ । औहोवा ।
— १ ५ ५ १
सू २ अर्वा २३४ । ताः । उहुवा ६ हाउ । वा । हम् ॥ ९ ॥

२८ २ २ २ १ २१ २
रथन्तरम् ॥ आभित्वा शूरनोनु मोवा । आदुग्धा इव धेन
२ २ १ २ १ २ २१ ४
व ईशानमस्य जगतः । सुवा २३ र्दशाम् । आइशानमा २३ इन्द्रा
१ २ २ ५ ५ १
३। तास्थू २३४ षा । ओवा ६। हाउवा । अस् ॥ १० ॥

२२ ११२ २ १
पुरुषगति ॥ हाऊ ।३। सेतूं४ स्तर ।३। दुस्त । रान् ।३।
२ २१ ११ २ २ २१ २ २ १ २
दानेनादानम् ।३। हाउ ।३। अहमस्मि प्रथमजा ऋता २३ स्या
१ १ १ २२ ११२ २ १ २ २२ ११
३४५ । हाउ ।३। सेतूं४ स्तर ।३। दुस्त । रान् ।३। अक्रोधेन क्रो·
२ १ १२२ ११ २२ २ २२ २ १
धम् ।२। अक्रोधेन क्रोधम् । हाउ ।३। पूर्वं देवेभ्यो अमृतस्य ना२३
२ १ १ १ २२ ११२ २ १ २ १ २
मा ३४५ । हाउ ।३। सेतूं४ स्तर ।३। दुस्त । रान् ।३। श्रद्धया
२२ २२ २ २ १ २ १ २ १ १ १
श्रद्धाम् ।३। हाउ ।३। यो मा ददाति सइदे वमा २३ वा ३४५ तु ।
२२ ११२ २ १ २ ११ २ २
हाउ ।३। सेतूं४ स्तर ।३। दुस्त । रान् ।३। सत्येनानृतम् ।३।

हाउ ।३। अहमन्नमन्नमदन्तमा २३ श्री ३४५। हाउ हाउ हाउ वा। एषा गतिः ।३। एतदमृतम् ।३। स्वर्गच्छ ।३। ज्योतिर्गच्छ ।३। सेतूंᳲ स्तीर्त्वा चतुरा २३४५ः ॥ ११ ॥

महानाम्न्यः ॥ ए ३। विदामघवन्विदाः। गातुमनुशᳲसिषः। दाइशा ३१ उवा २३। ई ३४ डा। ए ३। शिक्षा शचीनाम्पताइ। पूर्वीणाम्पुरू २ वसा ३१ उवा २३। ई ३४ डा। आभिष्टुमभा २ यि। ष्टिभिरा ३१ उवा २३। इ ३४ डा। स्वर्नाᳲ शूरा। हा ३१ उवा २३। ई ३४ डा। प्रा। चेतन प्रचेतया। इन्द्रा। द्युम्नायना २ इषा इ। इडा। इन्द्रा। द्युम्नाय०। अथा। इन्द्रा। द्युम्ना०। इडा। एवा हि शक्रो राये वाजाय वा १ ज्री ३ वाः। शविष्ठ वज्रिन्ना ३। जासाइ। मᳲ हिष्ठ वज्रिन्ना २३ हो। जासा ३१ उवा २३। इडाइडा २३४५। आया। हि पिबमा २ त्सुवा। इडा २३४५। ए ३। विदाराये सुवीरियाम्। भुवो वाजानाम्पतिर्वशᳲ३। अनुआ ३१ उवा २३। ई ३४ डा। ए ३। मᳲ हिष्ठवज्रिन्नृअसाइ। यः शविष्ठः शूरा ३। णा ३१ उवा २३। ई ३४ डा। यो मᳲ हिष्ठो मघोऽ ३। ना ३१ उवा २३। ई ३४ डा। अᳲशुर्नशोचा २ इः। हा ३१ उवा २३। ई ३४ डा। चायि। कित्वो अभिनोनया। इन्द्रो। विदेतमू २ स्तुहायि। इडा। इन्द्रो। विदे-

— १ १ १ २ २ १र — १
तमू २ स्तुहायि । अथा । इंन्द्रो । विदेतमू २ स्तुहायि । इडा ।
२ र र र २ २ २ २१र २ ४
ईंशे हि शक्रस्तमूतये हवा १ मा ३ हायि । जेतारमपरा ३। जायि-
५ १ १ १ २ १
ताम् । सनः स्वर्षदता २३ होयि । द्वाइषा ३१ उवा २३ । इडू-
१ १ १ १ १ २ २ १ — १ १ १ १ १ १
इडा २३४५ । क्रातुः । छन्दऋता २ म्बृहात् । इडा २३४५ । ए
— १ २ र १ १र र र र — १ २
२। इन्द्रं धनस्य सातयायि । हवामहे जेतारमपरा २। जितमा ३१
२ ५ — १ २ १ १
उवा २३। ई ३४ डा। ए २। सनः स्वर्षदतिद्विषाः । सा। नः स्वर्ष-
— १ २ २ ५ १र
दता २ यि । द्विषआ ३१ उवा २३। ई ३४ डा । पूर्वस्य यत्त आ
— १ २ २ ५ २ १ र ^ २
२ । द्रिवआ ३१ उवा २३। ई ३४ डा । अँ२ शुर्मदाया २। हा
२ ५ १ १ र र र — १ २
३१ उवा २३। ई ३४ डा । सू । म्न आधेहि नो वसाउ । पूर्त्तीः ।
२१ — १ १ १ २ २ १ — १
शविष्ठशा २ स्यतायि । इडा । पूर्त्तीः । शविष्ठशा २ स्यतायि ।
१ १ २ २ १ — १ १ २र र र
अथा । पूर्त्तीः । शविष्ठशा २ स्यतायि । इडा । वशी हि शक्रो नून-
२ २ २ २१र २ ४ ५ १ र
न्तन्नव्यँ२सा १ न्या ३ सायि । प्रभोजनस्यवा ३। त्राहान्। समर्येषु-
१ २ १ १ १ १ १ १ २
ब्रवा २३ होयि। वाहा ३१ उवा २३। इडू इडा २३४५ । शूरो ।
१र र — १ १ १ २ २१र — १ १
यो गोषु गा २ च्छतायि । इडा । साखा । सुशेवो २ द्वयूः । इडा
१ १ १ १ १ २ ३ र १ १ १ १ १ १ १ २र
२३४५। आयिवा । हियेवा २३४५। होयि । हो । वाहा ३१
२ ५ १ २ १ १ १ १ १ १
उवा २३। ई ३४ डा। आयि वा। हियम्रा २३४५ यि । होयि ।
१ २र २ ५ १ २ १
हो । वाहा ३१ उवा २३ । ई ३४ डा । आयिवा । हिइन्द्रा
१ १ १ १ १ १ २र २ ५ १
२३४५। होयि । हो । वाहा ३१ उवा २३ । ई ३४ डा । आयि-

वा । हिपूषा २३४५ न् । होयि । हो । वाहा ३१ उवा २३। ई
३४ हा । आयिवा । हि देवा २३४५ः । होयि । हो । वाहा ३१
उवा २३। ई ३४ डा ॥ १२ ॥

महादिवार्कीर्त्यम् ॥ हाउ ।३। आयुः ।३। ज्योतिः ।२।
ज्योता ३४। औहोवा । ए ३। वागुज्योति २३४५ः ॥ १३ ॥

ज्येष्ठसामानि । एवाहिये वा २३४। औ होवा । हा१ ह१
हा१ ह१ ह१ ३४ । औहोवा ।३। हि येवः । हियग्नायि । हिइन्द्रा ।
हिपूषान् । हिदेवा २३४५ः ॥ १४ ॥

वयोमनोवयः प्राणाः । वयश्चक्षुर्वयः श्रोत्राम् । वयो घोषो
वयो व्रताम् । वयो २३ भूताउ । वा ३। ई २३४५ ॥ १५ ॥

वयो मना २३ः । होइ हौवाओ २३४ वा । वयःप्राणा २३ः।
हायि हौ वाओ २३४ वा । वयश्चक्षू २३ः । होयि० । वयः श्रोत्रा
२३ म् । होयि हौवाओ २३४ वा । वयो घोषा २३ः । होयि० ।
वयोव्रता २३ म् । होयि हौवा० । वयोभूता २३ म् । होयि
हौवाओ २३४५ वा ६५६ ॥ ऊ २३४५ ॥ १६ ॥

ऊऽ२र्क् । हाउ ।३। हो २ वार्क् ।३। धर्मो २ धर्मः ।३। ॥१७॥
धर्म विधर्म ।३। सत्यङ्गाय ।३। ऋतं वद ।३। ह१ वंव २ वंव
२ वम् ।३। ॥ १८ ॥

औहौ होवा होयि ।२। औहौ होवा हा ३१ उ । वा २३ ।

३ ५ २ १र २ १ २ र १ २र र १र र
भु २३४ वात् । विभ्राड्बृहत्पिबतुसोम्यम् । ध्वौ हौ होवा होयि ।
२१ र १र र २र र १र र २ ३
औहौ होवा होयि । औ हौ होवाहा ३१ उ । वा २३ । जा २३४
५ १र २ १ २ १ २र १ २ २र र १र र २र
नात् । आयुर्दधद्यज्ञपतावविह्रुतम् । औ हौ होवा होयि ।२। औ
र १र र २ ३ ५ १र २र र १र २
हौ होवाहा ३१ उ । वा २३ । वा २३४ द्धात् । वातजूतोयो अभि-
१ २ १ र २र र १र र २र र १र र २
रक्षतित्मना । औहौ होवा होयि ।२। औहौ होवाहा ३१ उ । वा
३ ५ २ १ २ १र र २ २र र
२३ । का २३४ रात् । प्रजाः पिपर्ति बहुधा विराजति । औहौ
१र र २र र १र र २ — १ र २र १र
होवा होयि ।२। औहौ होवाहा ३१ उ । वा २ । अभ्राजीज्योति-
२ र ३ १ १ १ १
रभ्राजी २३४५ त् ॥ १९ ॥

१र २ १ २ १ २ ५र र
भूमिः ।३। अन्तरिक्षम् ।३। द्यौः ।२। द्या ३४। औ होवा ।
२ २र १र १ १ १ १
ए ३। भूताया २३४५ ॥ २० ॥

१र २ १ २ १र ३र५ ५र र
द्यौः ।३। अन्तरिक्षम् ।३। भूमिः ।३। भूमा ३४। औ होवा ।
२ १र ३ १ १ १ १
ए ३। आयुषे २३४५ ॥ २१ ॥

२र १र ३र २ ५र र ३ १ १ १ १
हाउ ।३। ज्योतिः ।२। ज्योता ३४। औ होवा । ई २३४५॥२२॥

२र २र ३ ४र ५ २र १र २ १
हाउ ।३। आज्यदोहम् ।३। मूर्द्धानन्दाइ । वा ३ अर ।
२ ३ ४ ५ २र १र ३ १ र २र ३ ४ ५ २ १
तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कविंँ सम्रा ।
२ १ २ ३ ४र ५ २र १ २ १ २ ३ ४र ५
जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३ ज्ञन । यन्तदेवाः ।
२र २र ३ ४र ५ २र ३ ४ २र र
हाउ ।३। आज्यदोहम् ।२। आज्यदो ५ हाउ । वा । ए । आज्य-
र २ २र र १ ३ १ १ १ १
दोहम् ।२। ए । आज्यदोहा २३४५ म् ॥ २३ ॥

हाउ ।३। हुम् । । चिदोहम् ।३। मूर्द्धानन्दाइ । वा ३ अर ।
तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कविं सम्रा ।
जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३ अन । यन्तदेवाः ।
हाउ ।३। हुम् । चिदोहम् ।२। चिदो ३ । हाउ । वा ३ । इ
२३४५ ॥ २४ ॥

हाउ ।३। च्याहम् ।३। मूर्द्धानन्दाइ । वा ३ अर । ति० ।
पूर्ववत् । हाउ ।३। च्योहम् ।२। च्यो ३ हाउ । वा ३ । ए ३ । ऋतम् २५
अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वः पताइ ।
धनपता २ इ । ना २ माः । मन्युना वृत्रहा सूर्येण स्वराड्यज्ञेन म-
घवा दक्षिणास्य प्रिया तनुराज्ञा विशन्दाधार । वृषभस्त्वष्टा वृत्रेण
शची पतिरन्नेन गयः पृथिव्या सृणिकोऽग्निना विश्वम्भूतम । भ्यभवो
वायुना विश्वाः प्रजा अभ्य पवथावषट्कारेणार्द्धभाक्सोमेन सोमपाः
समित्या परमेष्ठी । ये देवा देवाः । दिविषदः । स्थ तेभ्यो वो देवा दे
वेभ्यो नमः । ये देवा देवाः । अन्तरिक्ष सदः । स्थ तेभ्यो वो० । ये
देवा देवाः । पृथिवीषदः । स्थ तेभ्यो वो० । ये देवा देवाः । अप्सु-
पदः । स्थ तेभ्यो वो० । ये देवा देवाः । दिक्षुसदः । स्थ तेभ्यो वो० ।
ये देवा देवाः । आशासदः । स्थ तेभ्यो वो० नमः । अवज्यामिव
धन्वनो विते मन्युन्नयामसि मृड तान्न इह अस्मभ्यम् । इडा २३

भा। य इदं विश्वम्भूतम्। युयो ३। आउ। वा २३। ना

२३४ माः॥ २६॥

अधिप। ताइ। मित्रप। ताइ। क्षत्रप। ताइ। स्वःपताइ।

धनपता २ इ। ना २ माः। नम उत्त तिभ्यश्चोत्तन्वानेभ्यश्च

नमो निषङ्गिभ्यश्चोपवीतिभ्यश्च नमो स्यन्दुभ्यश्च प्र। तिद्धानेभ्यश्च

नमः प्रविध्यदुभ्यश्च प्रव्याधिभ्यश्च नमः स्सरदुभ्यश्च स्सारिभ्यश्च

नमः श्री। तेभ्यश्च श्रायिभ्यश्च नम स्तिष्ठदुभ्यश्चो पतिष्ठदुभ्यश्च

नमो यतेच वियते च नमः पथे च विपथाय च। अव ज्यामिव

धन्वनोविते मन्युन्नयामासि मृड तान्न इह अस्मभ्यम्। इडा २३

भा। य इदं विश्वम्भूतम्। युयो ३। आउ। वा २३। ना २३४

माः॥ २७॥

अधिप। ताइ। मित्रप। ताइ। क्षत्रप। ताइ। स्वः पताइ।

धनप ता २ इ। ना २ माः। नमोऽन्नाय नमोन्नपतय एकाक्षाय

चावपन्नादाय च नमो नमः। रुद्राय तीरसदे नमः स्थिराय स्थिर

धन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च क।

पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः क्रव्येभ्यश्च वि-

रिम्फेभ्यश्च नमः संवृते च विवृते च। अव ज्यामिव धन्वनोविते

मन्युन्नयामासि मृड तान्न इह अस्मभ्यम्। इडा २३ भा। य इदं

विश्वम्भूतम् । युषो ३ । आउ । वा २३ । ना २३४ भाः ॥२८॥

पुरुष व्रतानि । उहुवा हाउ । ३ । सहस्र शीर्षाः पुरु २३
षाः । सहस्राक्षः सहस्रा २३ पात् । सभूमिं सर्वतो वा २३
त्वा । अत्यतिष्ठ द्दशाङ्गु २३ लाम् । उहुवा हाउ । ३ । उहुवा
३ हाउ । वा ३ । इट् इडा २३४५ ॥ २९ ॥

उहु वा होवा २।३। त्रिपादूर्ध्व उदैत्पुरु २३ षाः । पादोस्ये-
हा भवत्पु २३ नाः । तथा विश्वङ्व्यक्रा २३ मात् । अशनान-
शनेआ २३ भी । उहुवा होवा २।२। उहुवा । हो २ । वा २३४ ।
औहोवा । इ २३४ डा । उहुवा होवा २।२। उहुवा । हो २ ।
वा २३४ । औहोवा । भू २३४ वाः । उहुवा होवा २ । २ ।
उहुवा । हो २ । वा २३४ । औहोवा । ऊ २३४५ ॥ ३० ॥

इयौ होवा २।३। पुरुष एवेदं सा २३ वाम् । यद्भूतं यच्च
भावा २३ याम् । पादोऽस्य सर्वा भूता २३ नी । त्रिपादस्यामृत-
न्दा २३ इवी । इयौ हावा २ । २ । इयौ । हो २ । वा २३४ ।
औहोवा । इ २३४ डा । इयौ होवा २ । २ । इयौ । हो २ । वा
२३४ । औहोवा । ज्यो २३४ तीः । इयौ होवा २ । २ । इयौ ।
हो २ । वा २३४ । औहोवा । इ २३४५ ॥ ३१ ॥

हाउ । ३ । तावानस्य । महा २३ यिमा ३ । हाउ । ३ ।

१ र  र र  २ १र  १  २र  २ १र  र
ततो ज्याया२ श्च पूरू २३ षा ३ः । हाउ । ३ । उतामृतत्वस्ये-
२  २र  १ र र २१र  २  २
शा २३ ना ३ः हाउ । ३ । यदन्नेनातिरोहा२३ ती ३ । हाऽ
२  १  १११
उ । ३ । वा ३ । इट् इडा २३४५ ॥ ३२ ॥

२  १ र २ १र २र  २  २ १र
हाऽ उ ३ वा । ततो विराडजायत । हाऽउ ३ वा । विरा-
२र १ २ १र २  २  १ २र १र  २  २
जो अधिपूरुषः । हाऽउ ३ वा । स जातो अत्यरिच्यत । हाऽउ ३
२ १र र २ १ र २ १  २  १११ १
वा । पश्चाद्भूमिमथो पुरः । हाऽउ ३ वा ३ । ई २३४५ ॥३३॥

२र  १ २र१ २  १ २ १ २
हाउ । ३ । अस्मिनस्मिन् । ३ । नृम्णाइ नृम्णम् । ३ ।
१  २  २ र  १ २  र र
निधाइमाहे । ३ । कयानश्चित्रा ३ आभू १ वा २ त् । ऊती स-
र  २ र  २ र  १ २
दावृ ३ धाः सा १ खा २ । कया शचिष्ठा ३ यावा १ र्ता
२र  १ २१ २  २ १ २
२३ । हाउ । ३ । अस्मिनस्मिन् । ३ । नृम्णाइ नृम्णम् । ३ ।
१  २  १  १ ^ ३  ५र र  १
निधाइमाहे ।२। निधा २३ यि । मा २ । हा २३४ औहोवा । सुव-
र ३ ११११
र्ज्योति २३४५ः ॥ ३४ ॥

२र  १
तवश्यावीयम् ॥ हाउ । ३ । ऊ २ । ३ । हुऊ २ । ३ ।
१  २  १ २ऽ २  २  १  ११११
इया हाउ । २ । इया ३ हाउ । वा ३ । इट्इडा २३४५ ॥ ३५ ॥
२  र १  २ १  २र र२ र२र  १र
हाऽउ ३ वा । अग्निरस्मि जन्मना जातवेदाः । इडा । सुवः ।
१ र  २  २र २र१ २१ २ र १  १र  १
इडा । हाऽउ ३ वा । घृतं मेचक्षुरमृतं म आसन् । इडा । सुवः ।
र  २  २ १र र१र  २र १र२  १र  १
इडा । हाऽउ ३ वा । त्रिधातुरर्को रजसो विमानः । इडा । सुवः ।
१र  २  १ २  १र २१  २१२  १र
इडा । हाऽउ ३ वा । अजस्रं ज्योतिर्हविरस्मि सर्वम् । इडा ।
२  १ र
सुवः । इडा ॥ ३६ ॥

हाउ । ३ । पात्यग्निर्विपो अग्रं पदं वेः । हा ३१ उवा २३ ।
सू२३४ वाः । इह । हा ३१ उवा २३ । ज्यो २३४ तीः ।
हाउ । ३ । पाति यहश्चरणꣳ सूरिशास्या । हा ३१ उवा
२३ । सू२३४ वाः । इह । हा३१उवा२३ । ज्यो२३४
तीः । हाउ । ३ । पातिना भा सप्तशीर्षाणमग्निः । हा३१उवा-
२३ । सू२३४वाः । इह । हा३१उवा२३ । ज्यो२३४तीः ।
हाउ । ३ । पाति देवानामुपमादमार्ष्वः । हा३१उवा२३ । सू२३४
वाः । इह । हा३१उवा२३ । ज्यो२३४तीः ॥ ३७ ॥

इया २ । ३ । इया हाउ । ३ । इन्द्रं नरो । ने ३ माधि ।
ताहवन्ताइ । हवन्ते ३ । हꣳहꣳहाꣳहाꣳहꣳ । ३ । हवन्ते । ३ । यत्पा-
रियाः । युनज । ताग्धियस्ताः । धियस्ता ३ः । हꣳहꣳहाꣳहाꣳहꣳ
। ३ । धियस्ताः । ३ । शूरोनृषा । ता ३ श्रव । सश्चकामायि ।
चकामे ३ । हꣳहꣳहाꣳहाꣳहꣳ । ३ । चकामे । ३ । आगोमतायि ।
व्रजेभ । जातुवन्नाः । तुवन्ना ३ः । हꣳहꣳहाꣳहाꣳहꣳ । ३ ।
तुवन्नः । ३ । इया २ । ३ । इया हाउ । इयाहाउ । इया ३ हाउ ।
वा । ए । व्रतमेसुवरे शाकुनः ॥ ३८ ॥

भ्राजा औहोहो हायि । त्वग्ने समिधानादी १ दिवा २ः ।

२ २ १ २ १ २ — २ २
जिह्वा औहोहोहायि । चरत्यन्तारा १ सानी २ । सत्वा औ-
१ २ १ २ २ २ १
हो हो हायि । नो अग्ने पयसावसू ३ वीत् । रयिं वर्चो
२ ३१ २ १ — १ २ ४ ५ ४
दशौहो ३ । हुम्मा २ । दा । औ ३ होवा । हो ५ इ । डा ॥३९॥
१ २ १ २ १ २ १ २ १ २ १२

[ ॐभूः । ॐ भूमिर्दिवमन्तरिक्षम् । ॐभुवः । ॐऋचो यजूं-
२ २ १ २ १ २ २ २ २ १ १ १ १ २१ १२ २ २
षि सामानि । ॐ भार्गो देवस्य धीमाही ३४५ । ॐ प्राणोऽपानो
२ २ २ २ १ २ १२ २ २ १ १ १ १ १
व्यानः समान उदानः । ॐ धियो योनः प्रचो ३४५ । ॐमहः । ॐ
१ १ १ १ २१२ २ २ १
जनः । ॐ तपः । ॐ सत्यम् । ॐ पुरुषाः । ॐ पुरोरजो अमृतोम् ।
२ १ १ १ १ — १ २ १ १ १ २
ॐ हऽ ३४५ । हुम् । आ २ । दायो । आ ३४५ । ॐ भूमिरन्त-
२ १२ २ १ १ ^ २ २
रिक्षं द्यौः । ॐ तत्सवितुर्वरेणियोम् । ॐ उऽ २ कूं । हाउ । ३ । होऽ
२ १ २ २ १ १ ^ २२
३ वाक् । ३ । ॐ ऋचोयजो अमृतोम् । ऊ २ कूं । हाउ । ३ ।
२ २ १ २२१२ २ २ २ २ २ २१ २१२
हो ३वाक् । ३।३। ॐ प्राणोऽपानो व्यानः समान उदानः । धियो
२ २ १ १ १ १ १ ^ २ २
योनः प्रचो ३४५ । ॐ ऊऽ २ कूं । हाउ । ३ । हो ३ वाक् । ३ ।
१ ऽ २ १ २ १ २ २ १ २ २ २ १
धर्मो २ धर्मः । ३ । धर्म विधर्म । ३ । सत्यं गाय । ३ । ऋतं
२ २ १ ९ १ ५ १
वद । ३ । हऽ वंव २ वं व २ वम् । ३ । ॥४०॥]

तवश्यावीयं प्रयुञ्जानः शुचिः पूतो ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्तते ।

१ २ २३१२ २ १ २ २२ १
सन्त्वा भूतान्यैरयन् । होयि । सन्त्वाभव्यान्यैरयन् । होयि ।
१ २ २ १ २ १ १ २ २२ १
सन्त्वा भविष्यदैरयत् । होयि । सन्त्वा भुवनमैरयत् । होयि ।
१ २ २१२ २ १
सन्त्वा भूतमैरयत् । होयि ॥ १ ॥

उवी २उवि । उविहो २ उवि । ३ । इती २ इति । इति
हो २ इति । ३ । असी २ असि । असिहो २ असि । ३ । अरू-
रुचो दिवं पृथिवीम् । असी २ असि । असि हो २ असि । ३ ।

पतिर । स्यपामोषधीना ३ म् । ओयि । पतायिरा २३४ सी । ३ ।
चायि । त्रं देवाना मुदगादनीकम् । वायि श्वेषां देवाना२ समि-
दजस्त्रं ज्योतिरात्तर२म् । होयि । ३ । आयुर्यन् । ३ । अवः । ३ ।
चक्षुर्मित्रस्य वरुणस्याग्नेः । सुवः स२ सर्पस२ सार्पा । ३ ।
जनावन२ सुवा २ स्सुवः । जना २ वना २ म् । सुवा २ः
सुवः । ३ । आ प्राद्यावा पृथिवी आन्तरि २ ३क्षा३म् । सृपिम-
सृपीऐही । ३ । अस्तोषतस्वभानवाऐही । विप्रानविष्ठयामता
ऐही । ग्रावाणो वर्हिषि प्रिया ऐही । इन्द्रस्यर२ हियं बृहा-
देही । इन्द्रा २ । स्यरा २ । हिया२म् । बृहदिन्द्रस्यर२
हियं बृहा देही । ३ । सूर्य आत्मा जगतस्तस्थुषा २३ श्चा ३ ।
अन्तश्चरति रोचना ऐही । ३ । अस्य प्राणादपानता ऐही
। ३ । व्यख्यन्महिषो दिवामैही । ३ । प्रो एति प्रो एति । ३ ।
प्रो । एति । प्रो । एति । प्रो २३ । एता ३४ औहोवा । ए ३ ।
देवा दिवा ज्योती २३४५ः ॥ २ ॥

उवी २।३। हिंगी २।३। हिंगिंगि । ३ । आयङ्गौः पृश्निर-

२ १ २ २ २ २ २ २ २
क्रमीदेही । ३ । असदन्मातरं पुरा ऐही । ३ । पितरं च प्रयं
२ १ २ १ १ १ १ १ २
त्स्वा ऐही । ३ । उवी २ । ३ । हिगि २ । ३ । हिगिगि । ३ । ॥ ३ ॥
२ १ २ १ २ १ २२ २
उवी । ३ । हिगी । ३ । हिगिगी । ३ । आयङ्गौः पृश्निर-
२ २ २ २ २ २ २ २ २ २ २ २
क्रमीदैही । असदन्मातरं पुरा ऐही । पितरञ्च प्रयन्त्स्वाऐही ।
२ १ २ १ २ १
उवी । ३ । हिगी । ३ । हिगिगी । ३ ॥ ४ ॥

२२ २ २̂ ३२ २२ ३२ २ २ २ २ १
हाउ हाउ हाउ । भ्राजा ओवा । ३ । उदुसञ्जा । ३ । चित्रं
२ २ २ ७ २ २२ २ २̂ ३२ २२ ३२ २
देवानामुदगादनी २३ का ३ म् । हाउ हाउ हाउ । भ्राजाओवा
२ २ १ ७ २
। ३ । तवेदसम् । ३ । चक्षुर्मित्रस्य वरुणास्य आ २३ ग्ना ३
२२ २ २̂ ३२ २२ ३२ २ २२ २ १२ २
यिः । हाउ हाउ हाउ । भ्राजाओवा । ३ । देवंत्रहा । ३ । आप्रा-
२ २ २ ७ २ २२ २ २̂ ३२ २२
द्यावा पृथिवी आन्तरी २३ क्षा ३ म् । हाउ हाउ हाउ । भ्राजा-
३२ २ २ २ १२ २ २ ७ २
ओवा । ३ । तिकेतवः । ३ । सूर्य आत्माजगतस्तास्थुषा २३ श्चा
२२ २ २̂ ३२ २२ ३२ २ २ २ २ १२
३ । हाउ हाउ हाउ । भ्राजाओवा । ३ । दृशोविश्वा । ३ । सूर्य
२ २ ७ २ २२ २ २̂ ३२ २२ ३२
आत्मा जगतस्तास्थुषा २३ श्चा ३ । हाउ हाउ हाउ । भ्राजाओ-
२ २ २ १ २ २
वा । ३ । यमूर्यम् । २ । यमू २३ रियाउ । वा ३ । ए ३ ।
२२ १२ २ २ ३ १ १ १ १
देवादिवा ज्योती २३४५ः ॥ ५ ॥

२२ १ १ २२ १ २ २२ २ १२ २ २२
हाउ । ३ । सहो भ्राज । २ । सहोभ्राजा । पोभ्राजा ।
१२ २ २२ १२ २ २ १ २ २२ १ २२ २ १
पोभ्राजा । पोभ्राज । अभ्राजीत् । ३ । व्यभ्राजीत् । ३ । अदि-

द्युतत् । ३ । अदिद्युतद्धिश्वम्भूत ४ महोवृ २ हात् । अदिद्युत
दभ्राट् भ्रा २ भ्राट् । आदिद्युतद् ऊर्मो अरू रु २ चात् । अदिद्युत-
द्धर्पउषसो अरोचा २ याः । हाउ । ३ । महोभ्राज । २ । महो-
भ्राजा । पोभ्राजा । पोभ्राजा । पोभ्राज । अभ्राजीत् । ३ । व्य-
भ्राजीत् । ३ । आदिद्युतत् । २ । अदिद्युता ३ त् । हाउवा । ए ।
अदिद्युतद्धर्मो अरूरुचदुषसान्दिवि सूर्यो विभाती २३४५ ॥ ६ ॥

औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा
२३ । भू २३४ वात् । अन्तश्चरतिरोचना । औहो औहोवा ।
होयि । २ । औहो औहोवा । हा ३१ उ । वा २३ । जा २३४
नात् । अस्य प्राणादपानती । औहो औहोवा । होयि । २ । औहो
औहोवा । हा ३१ उ । वा २३ । वा २३४ द्धात् । व्यख्यन्महि-
षोदिवम् । औहो औहोवा । होयि । २ । औहोऔहोवा । हा३१
उ । वा २३ । का२३४रात् । औहोऔहोवा । होयि । २ । औहो औ
होवा । हा ३१उ । वा२३ । भू२३४तीः । औहो औहोवा । होयि । २ ।
औहो औहोवा । हा३१उ । वा २ । अभ्राजीज्योतिरभ्राजीत् ।
औहो औहोवा । होयि । २ । औहो औहोवा । हा३१उ । वा
२३ । ए ३ । सत्रान्कामानशीमही २३४५ ॥ ७ ॥

हाउउइवा । इन्द्रः । भ्राजा ओवा । ३ । आयङ्गौः पृश्निरक्र-

२ १ १ २ऽ १ २ ३१ २२ ३१ १ १ १
मीदेही । हाऽउ३वा । इडा । आजा ओवा । ३ । असदन्मातरम्पु
१ १ १ २ऽ १ २१ ३१ २१ ३१ २ २
रा ऐही । हाऽउ३वा । सत्यम् । आजा ओवा । ३ । पितरञ्च
१ १ १ २ऽ १ २
प्रयन्त्स्वा ऐही । हाऽउ३वा । द्यौः ॥ ८ ॥
२ ऽ १ २ ३१ २१ ३१ १ २ १ १
हाउऽ३वा । भूतम् । आजा ओवा । ३ । अन्तश्चरतिरोचना
१ १ २ऽ १ २१ ३१ २१ ३१ १ २ १ १ १
ऐही । हाऽउ३वा । पृथिवी । आजा ओवा । ३ । अस्यप्राणादपा-
१ १ १ २ऽ १ २ ३१ २१ ३१ १ २
नता ऐही । हाऽउ३वा । साहः । आजा ओवा । ३ । व्यख्यन्महि-
१ २ १ १ २ऽ १ २
षो दिवामेही । हाऽउ३वा । तेजः ॥ ९ ॥
२ ऽ १ २ ३१ २१ १ १ २ १ १ १
हा उ३वा । आपः । आजा ओवा ।३ । त्रिंशद्धाम विराजता
१ १ २ऽ १ २ ३१ २१ ३१ १ २१ १ १
ऐही । हाऽउ३वा । ऊषा । आजा ओवा । ३ । वाक्पतङ्गायधीय-
१ १ १ २ऽ १ २ ३१ २१ ३१ १ २ १
ता ऐही । हाऽउ३वा । दीप्तः । आजा ओवा । ३ । प्रतिवस्तोरहद्यु-
१ १ १ २ऽ १ २
भा ऐही । हाऽउ३वा । ज्योतिः ॥ १० ॥
२१ १ १ २१ १ २११ १ १ ११
उग्रंस्लोकान रोचयः । होयि । इमांस्लोकानरोचयः ।
१ २ ११ १ २१ १ १ २१ १ २१ १ ५ १
होयि । प्रजा भूतमरोचयः । होयि । विश्वम्भूतमरोचयः । हो२हा
५१ १ २ ११ १ ३ १ १ १ १
२३४ औहोवा । धर्मोज्योती २३४५ः ॥ ११ ॥
२१ १ २ ३१ २१ ३१ १ २ १ १ २ १
हाउ हाउ हाउ । आजा ओवा ।३। दिदीहि विश्वतस्पृथुः ।

२ १ १ २ — २१ १ २
उदुत्यञ्जाता ३ वाइदाऽ १ सा२म् । देवं वहन्ती ३ कायिताऽ १
— २ १ १ १ २ — २ १ १ १
वा २ः । दृशे विश्वाया ३ सूराऽ१ या२म् । अपत्ये ताया ३ वो
२ — २ १ १ २ — २
याऽ १ था २ । नक्षत्रायन्ती ३ या क्तूऽ १ भा२यिः । सूराय-
१ २ — १ २
विश्वा ३ चाक्षाऽ १ सा२यि । अदृश्रन्नस्या ३ कायिताऽ १
— २ १ १ २ — १ १
वा २ः । विरश्मयोजा३ना ४ आऽ १ नू २ । भ्राजन्तो अग्ना ३
१ २ २१ १ १ २१ २१ ३१ १ ३१ १
योयाऽ१ था २३ । हाउ हाउ हाउ । भ्राजा ओवा । २ । भ्राजा ३
४ ३ १ १ १ १
ओ५वा ६५६ । ई २३४५ ॥ १२ ॥

२१ १ १ १ २१ ३१ १ २ १ १ २ १
हाउ हाउ हाउ । शुक्रा ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
२ १ १ २ — २१ १ २
उदुत्यञ्जाता ३ वाइदाऽ १ सा२म् । देवं वहन्ती ३ कायिताऽ १
— २ १ १ १ २ — २ १ १ १
वा २ः । दृशे विश्वाया ३ सूराऽ१ या२म् । अपत्ये ताया ३ वो
२ — २ १ १ २ — २१ १
याऽ १ था २ । नक्षत्रायन्ती ३ या क्तूऽ १ भा२यिः । सूराय-
१ २ — २ १ २
विश्वा ३ चाक्षाऽ १ सा२यि । अदृश्रन्नस्या ३ कायिताऽ १
— २ १ १ २ — १ १
वा २ः । विरश्मयोजा३ना ४ आऽ १ नू २ । भ्राजन्तो अग्ना ३
१ २ २१ १ १ २ २१ ३१ १
योयाऽ१ या २३ । हाउ हाउ हाउ । शुक्रा ओवा । २ ।
३ २ ४ ३ १ १ १ १
शुक्रा ३ ओ ५ वा ६५६ । ई २३४५ ॥ १३ ॥

२१ १ १ ३१२१ ३१ १ २ १ १ २ १
हाउ हाउ हाउ । भूता ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
२ १ २ — २१ १ २
तरणिर्विश्वा ३ दार्शाऽ १ ता २ः । ज्योतिष्कृदसी ३ सूराऽ १
— २ १ १ १ २ — २ १ १ १
या २ । विश्वमाभासी ३ रोचाऽ १ ना२म् । प्रत्यङ्देवा ३ ना-

वाऽ१ यिशा २ः। प्रत्यङ्कुदेषी३मानु १ षा२न। प्रत्यङ्विश्व२॑
सू३वार्दृऽ १शा२यि। येनापावका२चाक्षाऽ १ सा २। भुरण्यन्तञ्जा
३ना२॑आऽ१ नु २। त्वंवरुणा३पाश्याऽ१सा२३यि। हाउ हाउ
हाउ। भूता ओवा। २। भूता ३ओऽ५वा ६५६। ई २३४५॥१४॥

हाउ हाउ हाउ। तेजा ओवा। ३। दिदीहि विश्वतस्पृथुः।
तरणिर्विश्वा ३ दार्शाऽ १ ता २ः। ज्योतिष्कृदसी ३ सूराऽ १
या २। विश्वमाभासी ३ रोचाऽ १ ना२म्। प्रत्यङ्देवा ३ नां-
वाऽ१ यिशा २ः। प्रत्यङ्कुदेषी३मानू १ षा२न्। प्रत्यङ्विश्व२॑
सू३वार्दृऽ १शा२यि। येनापावका२चाक्षाऽ १ सा २। भुरण्यन्तञ्जा
३ना२॑आऽ१ नु २। त्वंवरुणा२पाश्याऽ१सा२३यि। हाउ हाउ
हाउ। तेजा ओवा। २। तेजा ३ ओऽ५ वा ६५६। ई
२३४५॥ १५॥

हाउ हाउ हाउ। सत्या ओवा। ३। दिदीहि विश्वतस्पृथुः।
उद्यामेषिरा ३ जाः पाऽ १ थु २। अहामिमानो ३ आक्तुऽ १
भा २ यिः। पश्यञ्जन्मानी ३ सूराऽ १ या २। अयुक्तसप्ता ३
शुन्ध्यूऽ १ वाऽ २ः। सूरोरथस्या ३ नाप्त्राऽ १ या २ः।
ताभिर्याति स्वा ३ युक्ताऽ १ यिभी २ः। सप्तत्वाहरी ३ तोरा
ऽ१ या २ यि। वहन्ति देवा ३ सूराऽ १ या २। शोचिष्केशंवी

१ २ २र र रै ३ २र ३र १
३ चाक्षा ऽ १ णा २३ । हाउ हाउ हाउ । सत्या ओवा । २।
३ २ ४ ३ १ १ १ १ १
सत्या ३ ओ ५ वा ६५६ । इ २३४५ ॥ १६ ॥

२र र रै ३ २र ३र र २ र १ र १
हाउ हाउ हाउ । ऋता ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
र र १ २ — २ र र १ २
उद्यामेषिरा ३ जाः पाऽ १ थूं २ । अद्यामिमानो ३ आक्तू ऽ १
— २ र १ २ — २
भा २ यिः । एश्यञ्जन्मानी ३ सूरा ऽ १ या २ । अयुक्तसप्ता ३
१ २ — २र र १ २ —
शुन्ध्यू ऽ १ वा ऽ २ः । सूरोरथस्या ३ नाप्त्रा ऽ १ या २ः ।
र र १ २ — २ र १ २
ताभिर्याति स्वा ३ युक्ता ऽ १ यिभि २ः । सप्तत्वाहरी ३ तोरा
— १ १ — २र र
ऽ १ था २ यि । वहन्ति देवा ३ सूरा ऽ १ या २ । शोचिष्केशवी
१ २ २र र रै ३ २र ३र र
३ चाक्षा ऽ १ णा २३ । हाउ हाउ हाउ । ऋता ओवा । २ ।
२ २ ४ ३ १ १ १ १
ऋता ३ ओ ऽ ५ वा ६५६ । इ २३४५ ॥ १७ ॥

१ १ २र १ २र र २र १र २र १ २ १र २ १ २
वाक् । मनः प्राणः प्राणो ऽपानो व्यानश्चक्षुः श्रोत्रं ॐ शर्म-
१ २ १र २ १र २र १ १
वर्म भूतिः प्रतिष्ठा । आदित्यः पिञ्यम् ।३। आयुःपिञ्यम् ॥३॥१८॥

२ २र १ २ — २
अन्तर्देवेषु ३ रोचा १ सा २ यि । ३ । अन्तश्चरती ३
१ २ — २ र र १ २ — २
रोचा १ ना २ । अस्य प्राणादा ३ पाना १ ता २ यि । व्यख्य-
१ २ — २ रर १ २ —
न्मही ३ षोदा १ यिवा २ म् । अन्तर्देवेषु ३ रोचा १ सा २ यि
२ २र १ १ ^ ३ ५र र
। २ । अन्तर्देवेषु ३ रो २३ । चा २ । सा २३४ । औहोवा ।
२ २र १र र र ३ १ १ १ १
ए ३ । देवादिवाज्योती २३४५ः ॥ १९ ॥

२र र र र १ र २ २र १ र २ १
हाउ हाउ हाउ । भ्राजाभ्राज । ३ । आयुरायुः । ३ । उदु-

२ र  र२  २ १ र र र  ७  २
स्यञ्जा । ३ । तवेदसम् । ३ । चित्रन्देवानामुदगादनी २३ का ३
२र  २र १ र २  २र १ र २  ११
म् । हाउ । ३ । भ्राजा भ्राज । ३ । आयुरायुः । ३ । देवं-
२ र  १  ७  २  २र
वहा । ३ । चक्षुर्मित्रस्य वरुणास्यआ २३ ग्ना ३ यिः । हाउ ।३।
२र १ र  २र १ र २  १ र २  २र र र र
भ्राजाभ्राज । ३ । आयुरायुः । ३ । तिकेतवः । ३ । आमाद्यावा
र  ७  २  २र  २र १ र २
पृथिवी आन्तरी २३ क्षा ३ म् । हाउ । ३ । भ्राजाभ्राज । ३ ।
२र १ र २  १ र २ १  ११ र र  ७
आयुरायुः । ३ । हवो विश्वा । ३ । सूर्य आत्मा जगतस्तास्थुषा
२  २र  २र १ र २  २र १ र २
२३ श्चा ३ । हाउ । ३ । भ्राजाभ्राज । ३ । आयुरायुः । ३ ।
१ र२  १  २  २  २  २र१र र र ३
यसूर्यम् । ३ । यसू २३ रियाउ । वा ३ । ए ३ । देवा दिवाज्योती
१ १ १ १
२३४५ः ॥ २० ॥

२र र रि  ३र २र ३र र  २ र  २८
हाउ हाउ हाउ । भ्राजाओवा । ३ । उदुत्यञ्जा । ३ । हाउ
१ २ १ र र र७  २  २र
३ वा । आर्चिः । इन्द्रमरो नेमधिताहवा २३ न्ता ३ यि । हाउ
र रि  ३र २र ३र र  २र  २८
हाउ हाउ । भ्राजाओवा ।३। तवेदसम् । ३ । हा ऽ उ ३ वा ।
१ २  २र र रि  ३र २र ३र र  २र र
शोचिः । हाउ हाउ हाउ । भ्राजा ओवा । ३ । देवंवहा । ३ ।
२८  १ २  १ र र  ७  २
हा ऽ उ ३ वा । तापः । यत्पार्यायुनजतायिधिया २३ स्ता
२र र रि  ३र २र ३र र  २ र
३ ः । हाउ हाउ हाउ । भ्राजा ओवा । ३ । तिकेतवः । ३ ।
२८  १ २  २र र रि  ३र २र ३र र
हा ऽ उ ३ वा । हारः । हाउ हाउ हाउ । भ्राजा ओवा । ३ ।
२ र  २८  १ २  १र र र र
हवोविश्वा । ३ । हा ऽ उ ३ वा । साहः । शूरोनृषा ताश्रवसा-
७  २र र रि  ३र २र ३र र
श्चक २३ मा ३ यि । हाउ हाउ हाउ । भ्राजा ओवा । ३ ।

२ १ २ऽ १ २ २१ २ २ ३१२१
यस्तूर्यम् । ३ । हा ऽ उ ३ वा । नारः । हाउ हाउ हाउ । भ्राजा
३१ २ २ १ १ २ऽ — १२ २
ओवा । ३ । इशोविश्वा । २ । हा ऽ उ ३ वा । भा २ : । आगो
२ १ ७ २ २१ २ २ १२ २१
मति व्रजेभ जातुवा २३ वा ३ : । हाउ हाउ हाउ । भ्राजा
३१ २ २ ऽ ३ ११११
ओवा । ३ । यस्तूर्यम् । ३ । हा ऽ उ ३ वा ३ । इ २३४५ ॥२१॥

ततः सन्त्वा भूतानीत्यारभ्य उन्नयामीति यावत्पठनीयानि ।

इति मध्याह्नसन्ध्याप्रयोगः ॥

## अथ क्रमप्राप्तो ब्रह्मयज्ञप्रयोगः ।

पादौ हस्तौ प्रक्षाल्य, द्विराचम्य, प्रागग्रेषु दर्भेषु प्राङ्मुख आसीनो दर्भपाणिर्देशकालौ सङ्कीर्त्य 'परमेश्वरप्रीतये ब्रह्मयज्ञमहं करिष्ये' इति सङ्कल्प्य, हस्तौ गोकर्णाकृतिवज्जान्वोरुपरि विन्यस्य, मस्तकादीन्यङ्गान्यकम्पयंस्तन्मनस्को ऋषिच्छन्दोदेवताब्राह्मणान्संस्मृत्य, प्रणवव्याहृतिगायत्रीं आदौ पठित्वा, दक्षहस्ताङ्गुलीनां मध्यमपर्वसु स्वरोच्चारणसमये अङ्गुष्ठं योजयन्, दीर्घाक्षरं सव्यहस्ताङ्गुलिग्रहणेन दर्शयन्, हस्ताग्रकृतदृष्टिः सामसु अङ्गुष्ठतर्जन्योर्यवान्तरं; संहितायां तिलान्तरं कुर्वन्स्पष्टाक्षरं मध्यमवृत्त्या मध्यमस्वरेण एकया वृत्त्या शक्त्या पठेत् । पुनः प्रणवव्याहृतिसावित्रीं पठित्वा 'ॐ नमो ब्रह्मणे' इति त्रिरुक्त्वा समापयेत् । ततो रुद्रसंहितामुपतिष्ठेत् । ब्रह्मयज्ञादर्वाग्वा । अस्य मूलवाक्यानि नारदोक्तशिक्षायां द्रष्टव्यानि ।

इति ब्रह्मयज्ञः ।

## अथ पञ्च महायज्ञाः ।

तत्र प्रातर्होमोत्तरं पाकार्थमावसथ्याग्नेरेकदेशं गृहीत्वा,

पाकशालास्थचुल्ल्यां संस्थाप्य, पाकं कृत्वा, पुनस्तावदेव ततः समादाय शालाग्नौ प्रक्षिपेत् । पश्चाद्वैश्वदेवः ।

## अथ वैश्वदेवः ।

तत्रासादनक्रमः । स्वदक्षिणे शुद्धोदकपात्रम् । उत्तरतोऽग्नेरपाम्पूर्णश्चमसः । ओदनादि हविष्यं घृतादिसिक्तं स्वपुरतः । समिद्द्वयञ्च । एवमासाद्याचम्य प्राणानायम्य, गायत्र्यभिमन्त्रितोदकेन हौमीयं संप्रोक्ष्य, देशकालौ सङ्कीर्त्य 'ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपं वैश्वदेवाख्यं कर्माहं करिष्ये' इति सङ्कल्प्य, भूतमिति ब्रूहीति पत्नीं प्रति ब्रूयात् । असन्निहितायां पत्न्यामन्यां वा । ततः पत्नी क्षालितकरचरणा भक्तियुक्तया वाचा भूतमिति प्रतिब्रूयात् । ततः स्वयं ओमित्युच्चैस्तस्मै नमस्तन्माख्या इति उपांशु ब्रूयात् ।

अथ होमादि बलिदानान्तं वाग्यतः स्यात् । ततो दक्षिणं जान्वाच्य, यथाविधिना भूजप-पर्युक्षण-समिद्धोमादीन्विधाय, प्रजापतये स्वाहेति मनसा मध्येऽग्नौ हुत्वा, मनसैव त्यागं विधाय, अग्नये स्विष्टकृते स्वाहेति ऐशान्यां हुत्वा, इदमग्नये स्विष्टकृते न ममेति त्यागं विधाय, समिद्धोमानुपर्युक्षणमसेकादीन्विधायाग्निं परिक्रम्य, चमसं निनीयाद्भिः पुनः पूरयेत् । ततो हुतशेषेण बलिदानम् । कुण्डसमीपे संमार्जनादिसंस्कृते भूप्रदेशे दक्षिणहस्तेन चमसस्थं जलमादाय, प्राक्संस्थधारां दत्वा बलिचतुष्टयपर्याप्तमन्नमादाय—

'ॐ पृथिव्यै नम' इदं पृथिव्यै न ममेति त्यागः । 'ॐ वायवे नम' इति तत्पूर्वस्यां, वायवे न मम । 'ॐ विश्वेभ्यो देवेभ्यो नम' इदं विश्वेभ्यो देवेभ्यो न मम । 'ॐ प्रजापतये नमः' इदं प्रजापतये न मम । मानसोऽयं बलिस्त्यागश्च ।

एवमेकपङ्क्त्यां प्राक्संस्थं बलिचतुष्टयं दत्वा, तदुपरि पूर्वव-

ञ्जलं सिञ्चेत् । ततस्तदुत्तरस्यां पूर्ववज्जलमासिच्य तावदेवान्न-
मादाय तथैव बलिदानम् ।

ॐ अद्भ्यो नमः । इदं अद्भ्यो न मम । ॐ ओषधिवनस्प-
तिभ्यो नमः । इदमोषधिवनस्पतिभ्यो न मम । ॐ आकाशाय
नमः । इदमाकाशाय न मम । ॐ कामाय नमः । इदं कामाय न
मम । पुनस्तथैवोपरि सेकः ।

पुनस्तदुत्तरतः जलमासिच्य, तावदेवान्नं आदाय तथैव
बलिदानम् । ॐ मन्यवे नमः । इदं मन्यवे न मम । ॐ इन्द्राय
नमः । इदं इन्द्राय न मम । ॐ वासुकये नमः । इदं वासुकये
न मम । ॐ ब्रह्मणे नमः । इदं ब्रह्मणे न मम । ततस्तदुपरि
पूर्ववज्जलासेकः ।

ततस्तदुत्तरस्यां किञ्चिज्जलमासिच्य 'ॐ रक्षोजनेभ्यो नम'
इदं रक्षोजनेभ्यो न मम । इति बलिदानम् । ततस्तदुपरि जलमा-
सिच्य उदकं स्पृशेत् ।

ततो बलिशेषमन्नं जलेनाभ्युक्ष्य, कृतापसव्यः सव्यं जान्वा-
च्य, सर्वेषां दक्षिणतो जलमासिच्य 'ॐ पितृभ्यः स्वधा' इति
पितृतीर्थेन बलिदानम् । इदं पितृभ्यो न मम । ततस्तदुपरि जल-
मासिच्य उदकं स्पृशेत् ।

ततः सर्वेषामुत्तरतो 'ॐ यवेभ्यो नम' इति यवाग्रयणोत्तर-
माव्रीह्याग्रयणं यावत् । व्रीह्याग्रयणोत्तरं 'ॐ व्रीहिभ्यो नम' इति
आयवाग्रयणं तथैव त्यागः । स्वकर्तृकोऽयं बलिः । प्रवासादा-
वेतस्य लोपः । ततः कृताञ्जलिपुटोऽग्निं प्रार्थयेत् ।

आरोग्यमायुरैश्वर्यं धीधृतिः शं बलं यशः ।
ओजो वर्चः पशून् वीर्यं ब्रह्म ब्राह्मण्यमेव च ।
सौभाग्यं कर्मसिद्धिश्च कुलज्यैष्ठ्यं सुकर्तृताम् ।
सर्वमेतत्सर्वसाक्षिन् द्रविणोद रिरीहि णः ॥

ततो वामदेव्यं गीत्वा चतुर्भिश्चेत्यग्निं प्रणमेत् ॥

इति वैश्वदेवः ।

## अथ नित्यश्राद्धम् ।

आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्यापसव्यं कृत्वा 'गोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां, मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुकामुकशर्मणां पितृयज्ञसिद्धये नित्यश्राद्धमहं करिष्ये' इति सङ्कल्प्य, उदङ्मुखान् ब्राह्मणान्ब्राह्मणं वा उपवेश्य, द्विगुणभुग्नकुशसहितं तिलोदकमादाय 'अमुकगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणः एतद्वः पाद्यं' इत्युक्त्वा, पितृतीर्थेन ब्राह्मणस्य पादयोर्निःक्षिपेत् । मातामहादीनां द्वितीयश्चेत्तदा पृथक्तेभ्यो देयमेकश्चेत्तन्त्रेण ।

तत आसनम् । अमुकगोत्रेभ्योऽस्मत्पित्रादुयुच्चार्य, मातामहादीनामपि नामगोत्रादुयुच्चार्य 'अमुकशर्मभ्य इदमासनं स्वधा' इत्युक्त्वा जलं दक्षिणहस्ते दत्वा, विप्रवामभागे द्विगुणदर्भसतिलकुशासनं दद्यात् ।

ततश्चन्दनेन मूर्द्धांसजानुपादेषु वामाङ्गादि विष्णुमन्त्रेण सम्पूज्यार्चनसङ्कल्पं कुर्यात् । 'यथादत्तं गन्धाद्यर्चनं गोत्रेभ्योऽस्मत्पित्रादुयुच्चार्य अमुकशर्मभ्यो यथायथाविभागं वः स्वधे'त्युक्त्वा जलं दद्यात् ।

ततो भोजनार्थं पात्रेऽन्नं परिविष्य 'सत्यं त्वर्तेन परिषिञ्चामीति' अभिषिञ्च्य 'ॐ पृथिवी ते पात्रं' इत्यादि विष्णुमन्त्रान्तमुच्चार्य 'इदमन्नादि यद्दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं गोत्रेभ्य' इत्याद्यभिधाय अमुकामुकामुकशर्मभ्यो यथायथाविभागं वः स्वधेत्युक्त्वोदकं भुव्युत्सृजेत् । ततो भोजयित्वा, किञ्चित्फलं काकिणीं वा दत्वा नमस्कुर्यात् । अन्नसङ्कल्पान्तं नित्यश्राद्धम् ।

इति नित्यश्राद्धम् ।

अथ मनुष्ययज्ञः ॥

आचम्य प्राणानायम्य । देशकालौ सङ्कीर्त्य, स्नानान्तं विधाय 'श्रीपरमेश्वरप्रीतये नित्यविधिरूपं मनुष्ययज्ञमहं करिष्ये' इति सङ्कल्प्य, आगतमतिथिं पाद्यादिभिः सम्पूज्यान्नं परिविष्य, सकुशजलमादाय निवीती 'इदं अन्नादि यद्दत्तं तृप्तिपर्यन्तं दास्यमानञ्च सनकादिमनुष्येभ्यो हन्तेत्युच्चार्य' प्राजापत्यतीर्थेन जलमुत्सृजेत् ।

एवं पितृयज्ञमनुष्ययज्ञकरणासमर्थेन भिक्षा-पुष्कल-हन्तकारादिशक्त्या अन्नमुद्धृत्य प्राचीनावीती द्विगुणदर्भं जलमादाय 'पितृयज्ञसिद्ध्यर्थमिदमन्नं सार्द्धं पितृभ्यः स्वधेत्युच्चार्य' जलं क्षिप्त्वा, अवशिष्टस्यान्नस्यार्द्धभागं निवीती सनकादिमनुष्येभ्यो हन्तेत्युक्त्वा जलमुत्सृजेत् ।

इति मनुष्ययज्ञः ।

ततः 'सुरभ्यै नम' इति सुरभीं सम्पूज्य गोग्रासं दद्यात् ।

सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता ।
गोग्रासन्तु मया दत्तं सुरभि प्रतिगृह्यताम् ॥

इति मन्त्रेण गोग्रासं दत्वा, गोभ्यो न ममेति त्यागः ।

ततः—

पिपीलिकाः कीटपतङ्गसङ्घा बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥

इति मन्त्रेण सर्वभूतेभ्यो न ममेति सर्वभूतबलिं गृहाङ्गणे दद्यात् । ततः—

ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥

इति वायसेभ्यो न ममेति वायसेभ्यो गृहाद्बहिर्बलिर्देयः । ततो—

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।

ताभ्यां बलिं प्रदास्यामि रक्षेतां पथि मां सदा ॥

इति श्वभ्यामिदं न ममेति श्वबलिर्गृहाद्बहिर्देयः । ततः पादौ प्रक्षाल्याचम्य, बालादीन् भोजयित्वा स्वयं भुञ्जीत ।

इति गोग्रासादिबलिदानम् ।

## अथ भोजनप्रयोगः ।

सुप्रक्षालितपाणिपादमुख आचम्य, शुचौ संवृते देशे चतुरस्रमण्डले सुपीठाद्यासने प्राङ्मुख उपविश्य, पात्रे परिवेशितमन्नं प्रणम्य, अस्माकं नित्यमस्त्वेतदिति सम्प्रार्थ्य सव्याहृतिगायत्र्या तदन्नमभिमन्त्र्य जलेन 'ॐ सत्यं त्वर्तेन परिषिञ्चामीति' परिषिञ्च्य, घृताक्तमन्नमादाय, स्वाग्रे दक्षिणभागे बलित्रयं प्राक्संस्थं दद्यात् ।

ॐ भूपतये नमः । ॐ भुवनपतये नमः । ॐ भूतानां पतये नमः ।

ततश्चतुर्थो विष्णवे बलिर्देय इति केचित् । ततो जलमादाय 'ॐ अमृतोपस्तरणमसि स्वाहेति' मन्त्रेण जलं प्राश्य, गार्हपत्यादीनात्मनि विचिन्त्य, तर्जनीमध्यमाङ्गुष्ठैरन्नमादाय, ॐ प्राणाय स्वाहेति मुखे हुत्वा, मध्यमानामिकाङ्गुष्ठैर्व्यानाय स्वाहेति हुत्वा, कनिष्ठिकानामिकाङ्गुष्ठैः ॐ अपानाय स्वाहेति हुत्वा, सर्वाभिः सहाङ्गुष्ठैः ॐ समानाय स्वाहेति हुत्वा, तर्जनीं विना ॐ उदानाय स्वाहेति जुहुयात् । एतान्पञ्च ग्रासान्महामौनी दन्तैरखण्डयन्निगीर्य उदकं स्पृष्ट्वा, शिखां विमुच्यान्यदश्नीयात् । ततो भुक्त्वाऽवशिष्टादन्नमादाय—

रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् ।
उच्छिष्टभागधेयानामक्षय्यमुपतिष्ठतु ॥

इति मन्त्रेणोच्छिष्टभागधेयेभ्योऽन्नं सोदकं भुवि दत्वा, अप्रक्षालितेनैव हस्तेन जलमादाय, ॐ अमृतापिधानमसि स्वाहेति

मन्त्रेणार्द्धं पीत्वाऽवशिष्टं पितृतीर्थेन भूमौ प्रक्षिप्य, मृज्जलाभ्यां हस्तौ मुखञ्च संशोध्याचम्य जलमादाय।

ॐ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठन्तु समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक्॥

इति मन्त्रेण दक्षिणपादाङ्गुष्ठे स्नापयित्वा, अभीष्टदेवतां स्मरेत्।

अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयन्त्वशेषम्।
सुखञ्च मे तत्परिणामजं वै यच्छन्त्वरोगं मम चाऽस्तु देहे॥
विष्णुरक्षा यथैवान्नं परिणामश्च वै यथा।
सत्येन तेन यद्भुक्तं जीर्यत्वन्नमिदं तथा॥
इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम्।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः॥

इति भोजनप्रयोगः।

## अथ सायंसन्ध्या।

ततः सायङ्कालेऽग्निं प्रादुष्कृत्य सायंसन्ध्यां कुर्यात्। तत्र सर्वं प्रातःसन्ध्यावत्। विशेषो यथा। 'सायंसन्ध्योपासनमहं करिष्ये' इति सङ्कल्पे। ध्यानावाहने विशेषः—

अपराह्ने तु या सन्ध्या कृष्णाङ्गी कृष्णवाससा।
गरुडस्कन्धमारूढा तथा च विष्णुदेवता।
वृद्धा सामवेदमुखी विष्णुना सह आवह।
आयाहि वरदे देवि त्र्यक्षरे विष्णुवादिनि।
सरस्वति च्छन्दसां मातर्विष्णुयोने नमोऽस्तु ते॥

आचमने विशेषः। अग्निश्चेति नारायण ऋषिः प्रकृतिच्छन्दः अग्निर्देवता आचमने विनियोगः।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण

शिश्ना अहस्तदवलुम्पतु । यत्किञ्च दुरितं मयि इदमहं माममृत योनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

ततो ऋतञ्च सत्यञ्चेत्यनेनाघमर्षणानन्तरं उपविष्ट एवाञ्जलि-त्रयं गायत्र्या सूर्याभिमुखः क्षिपेत् । ततः सूर्यमुपस्थाय, सूर्याभि-मुखो नासाग्रे अधोमुखधृतहस्तो मौनी गायत्रीं सञ्जप्य, सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन विष्णवात्मा रविः प्रीय-ताम् । तत्र 'उत्तरे शिखरेति' विसृज्य सायंहोमं कुर्यात् ।

इति सायंसन्ध्या ।

## अथ सायंहोमः ।

तत्र सर्वं पूर्ववत् । तत्र न्यञ्चकरणे 'विदन्ते वसु' इति विशे-षः । अग्नये स्वाहेति पूर्वाहुतिः । प्रजापतय इति उत्तरा ।

इति सायंहोमः ।

वैश्वदेवन्यञ्चकरणे एवमेव । ततः सामपठनम् । एषो उषेति उषा गायत्र्यश्विनौ, आबुन्द इति उषा गायत्रीन्द्रः, ऋजुनीती-ति कुत्सो गायत्री विश्वेदेवाः, मत्युअदर्शीति उषा बृहत्युषा, उद्धे-दभीति त्रयाणां सुपर्णो गायत्रीन्द्रः जपे विनियोगः । एवं ऋ-ष्यादीन्संस्मृत्य सामानि पठेत् ।

५र र १ र २ १ २
ॐ एषो उषाः । आपूर्विया । व्युच्छति । होवा ३ हायि ।
१र २ ३ २ ३र २ २ १
प्रियादा २३ यिवा ३४ः । स्तुषा ३४ यिवापा ३ । श्विनो २३४
५ ४ ५
वा । बु ५ हो ६ हायि ॥ १ ॥

१र र २ र १ १ २ १ ^
आबुन्दंवृ । त्रहाद । दायि । जातः पृच्छा ३ त् । विमा २
३ ५ २ १ २ १ २ र १ २
ता २३४ राम् । कउग्रा २३ः के । हा श्रृण्विरे । इडा २३ भा
१
३४३ । ओ २३४५ इ । डा ॥ २ ॥

५ २ ४ ५ ४ ५ ४ २ १२ २ १ २
ऋजुनीतीनोवरुणः । इहा । मित्रो नयतिविद्वा २३ न्समाः ।
१ २ २ १२ २ १ २ १ २ २ २
इहा । अर्यमादा २३ यिवायि । इहा । सजोषा ३ उवा ३ । ई
५
३४ हा ॥ ३ ॥

२ ५ २ १ २ २ २ २ २ २
प्रात्युवदङ्गर्याय्योवा । ऋच्छन्ती दुहिता दिवो अपो मही वृणुते
१ २ १ २ १ ४ १ २
चाक्षुषा २३ तमाः । ज्योतिष्कृणो २३ ती ३ । सूना २३४ रा ।
२ ५ ६ २ २ १ १ २ २ २ २ २ २
ओवा ६ । हाउवा ॥ उयोतोवा । कार्णोति सूनरी उदुस्रियाः सृजते
२ १ २ १ २ १ ४
सू । रिया २३ः स चा । उद्यन्नक्षा २३ त्राइम् । आर्चा
२ २ ५ ५ २ १ २ २
२३४ इवात् । ओवा ६ । हाउवा ॥ उयोवा । नाक्षत्रमर्चिवत्तवे
२ २ १ २ १ २२ १ ४
दुषो विशुपि सू । रिया २२ स्यचा । माम्भक्तेना २३ गा ३ ।
१ २ २ ५ ५ १
माइमा २३४ हा । ओवा ६ । हाउवा । अम् ॥ ४ ॥

५ २ ४ ५ १ २ ३ ६ २ १ २ १ ७
उद्वदभ्योवा । श्रुतामा २३४ घाम् । वृषामन्ना । रिया २
३ ६ १ २ १ २ २ १ २
पा २३४ साम् । आ २ स्ता । गा २३ मे । पायि सूरिया । औ
४ १ ४
३ होवा । हे ५ इ । डा ॥ ५ ॥

५ २ २ ५ ४ ३ ४ ५ १ २
उद्वदभिश्रुतामा ६ घाम् । वृषभन्नर्या । हुम् । पा २३४
५ १ २ २ २२ १ २ १ ५ ४
साम् । आस्ता ३ उवा । रायायि । पिसू २३४ वा । रा ६ यो
५
६ हायि ॥ ६ ॥

४ २५ ४ ५ ४ २ ५ ४ ५ ४ ५ ५ ४ २ ४ ५ २ ४ २
उद्वदभिश्रुता मघम् । इष इषाहायि । वृषभन्नर्या । हा २ हा
१ ५ १ २ २ १ २
३ यि । पा २३४ साम् । आस्ता ३ उवा ३ । रा २ मा २३४

५र २ २ १र ३ १ १ १ १
औहोवा । षिमूरिया २३४५ ॥ ७ ॥

ततः रात्रिभोजने 'ऋतं त्वा सत्येन परिषिञ्चामीति' अन्नप्रोक्षणे विशेषः । रात्रौ दत्ते सर्वेभ्योऽन्ने फलीकरणकुक्कुसा ओदनास्रावणं जलञ्च एकीकृत्य 'ॐ रुद्राय नमः' इति सुमदेशे बलिर्देयः । रुद्राय न ममेति त्यागं विधाय, उदकं स्पृशेत् । ततः शयनम् ।

इति श्रीशुक्लविश्रामात्मज–शिवरामविरचितायां गोभिलगृह्यपद्धतौ सुबोधिन्यां द्वितीयस्य आह्निकप्रकाशस्य प्रयोगपद्धतिः समाप्ता ॥

---

## अथ तृतीयः प्रकाशः ।

### अथ पर्वाहकृत्यप्रयोगः ॥

प्रातर्होमोत्तरं पूर्वाण्ह एव अग्नेः स्थण्डिलं गोमयोदकाभ्यां सर्वत उपलिप्य, अग्निसमीपे प्रातः करिष्यमाणयागार्थं द्रव्याण्यासादयेत् । तानि यथा–अष्टादशेध्मकाष्ठानि । विशाखाच्छिन्नमुष्टित्रयं पञ्चकं वा बर्हिः । घृतम् । स्थालीपाकपर्याप्ता व्रीहयः, यवा वा । चरुस्थाली । मेक्षणम् । स्रुक्स्रुवौ । अनुगुप्ता आपः । उलूखलमुसले । कंसपात्रम् । शूर्पम् । पवित्रद्वयम् । समित्त्रयम् । पूर्णपात्रादीनि । एतान्यासाद्यापराण्हे स्नात्वा, माध्याह्निकं निर्वर्त्य, वैश्वदेवं कृत्वा, दर्शश्चेत्पिण्डपितृयज्ञं कुर्यात् ।

अग्नेः पश्चात्प्राङ्मुख उपविश्याचम्य प्राणमायम्य देशकालौ सङ्कीर्त्य 'पितृतृप्तिद्वारा श्रीपरमेश्वरप्रीतये पिण्डपितृयज्ञमहं करिष्ये' इति सङ्कल्प्य प्राचीनावीतिना पश्चादग्नेर्दक्षिणासंस्थं पात्राण्यासादयेत् । सहविः शूर्पम् । उलूखलमुसले । चरुस्थाली । पवित्रम् । उदकपात्रम् । मेक्षणम् । स्रुवः । आज्यम् । शङ्कुः । कुशमुष्टिद्वयम् । तत्रैकं मूललूनम् । विशाखलूनमपरम् । कंसपात्रम् ।

समिद्द्वयम् । पिञ्जूल्येका । अवनेजनार्थ पात्रत्रयम् । तिलाः । गन्धः । दर्वी । क्षौमदशासूत्रम् ।

एवमेतान्यासाद्य गायत्र्याऽभिमन्त्रितोदकेनासादनक्रमेण द्रव्याणि सम्प्रोक्ष्य, सजलां चरुस्थालीमग्नावधिश्रयेत् । ततः पश्चादग्नेर्दक्षिणाग्रैः कुशैः स्तरणम् । तेषु उलूखलमुसल—कंसपात्र—सहविःशूर्पाणामासादनम् । ततः कंसेन तन्दुलानादाय, उलूखले पितृतीर्थेन 'पितृभ्यस्त्वा जुष्टं निर्वपामीति' सकृन्निर्वपेत् । न द्विस्तूष्णीम् । ततः सव्योत्तराभ्यां पाणिभ्यां सकृत्कण्डनम् । सकृदुत्पवनम् । सकृत्फलीकरणम् । सकृत्प्रक्षालनम् । सकृद्दक्षिणाग्रपवित्रायां चरुस्थाल्यां तन्दुलानामावपनम् । सकृदप्रदक्षिणं मेक्षणेनावघट्टनम् । ततः सकृद्दक्षिणाग्रपवित्रान्तर्हितं शृतं चरुमभिघार्य, दक्षिणत उद्वास्य, प्रत्यभिघारयेत् ।

ततः शङ्कुमादाय प्रादेशमितदीर्घां चतुरङ्गुलविस्तृतां दक्षिणाग्रां यवाकृतिसदृशीं कर्षूं खातयेत् । ततः सव्यं कृत्वा, तस्या दक्षिणतश्चतुरस्रे स्थण्डिले यथाविधिना भूसंस्कारान्कृत्वा, अग्न्येकदेशमादाय, कर्ष्वाः पश्चिमतो नीत्वा, तमग्निं कृतलक्षणे स्थण्डिले ॐ भूर्भुवःस्वरिति संस्थापयेत् । ततः सव्येनैव तस्याग्नेः स्तरणम् । यथा--आसादितविशाखलूनकुशमुष्टिं हस्तद्वयेनादायाग्नेः पश्चादास्तीर्य, दक्षिणहस्तस्थान्कुशानग्नेर्दक्षिणतः संस्तरंस्तथैव वामहस्तस्थानग्नेरुत्तरतः प्रकिरन्नुभयतः प्राञ्चं नीत्वा, दक्षिणहस्तगृहीतानि कुशाग्राणि वामहस्तगृहीतकुशाग्रोपरि कुर्यात् । अथापसव्यं कृत्वा, उपमूलच्छिन्नैः कुशैर्दक्षिणाग्रैः कर्षूमध्ये स्तरेत् । तत एकैकशश्चरुस्थालीमेक्षणकांस्यपात्रावनेजनपात्राणि तिलगन्धसमिद्द्वयपिञ्जूलीदर्वीक्षौमदशादीनि सव्येन पाणिनाऽऽदाय, स्वपृष्ठतो नयन् दक्षिणेनादाय, स्वाग्रे संस्थापयेत् । शिष्यादिश्चेत्तेनाप्येवमाहृत्य स्थापनीयानि ।

ततः कर्ष्वाः पश्चिमतोऽवनेजनार्थं त्रीणि पात्राणि दक्षिणसंस्थानि आसादयेत् । तेषु पात्रेषु पृथक् तूष्णीं जलमासिच्य, पात्रान्तरे सतिलमुदकमादाय 'अमुकगोत्र पितः अमुकशर्मन्नेतत्ते तिलोदकम्, ये चात्र त्वानुयांश्च त्वमनु तस्मै ते स्वधेति' मन्त्रेण प्रथमपात्रे तिलोदकमासिच्य, अप उपस्पृश्यैवमेव पितामहप्रपितामहयोः पात्रद्वये तत्तन्नामपूर्वकं तिलोदकमासिञ्चेत् । एवं त्रिष्वपि पात्रेषु गन्धोदकं दद्यात् । प्रत्येकं उदकस्पर्शः कार्यः ।

ततोऽग्नौ करणम् । कंसपात्रे चरुमुद्धृत्य, कंसपात्रसमिद्द्वयमेक्षणोदकपात्राण्यादाय, अग्नेः पश्चिमतः प्राङ्मुख उपविशेत् । ततो यज्ञोपवीती भूत्वा दक्षिणं जान्वाच्य, यथाविधिना भूजपर्युक्षणसमिद्धोमादीन् विधाय, मेक्षणेन 'ॐ स्वाहा' इत्युच्चार्य हुत्वा 'सोमाय पितृमते' इति मन्त्रं समाप्य, 'इदं सोमाय पितृमते न ममेति' त्यागः । एवं 'स्वाहा अग्नये कव्यवाहनायेति' द्वितीयामाहुतिं हुत्वा, इदमग्नये कव्यवाहनाय न ममेति त्यागः ।

ततः समिद्धोमानुपर्युक्षणप्रसेकान्विधाय अपसव्यं कुर्यात् । ततः पिञ्जूलीं सव्येनादाय तस्मादपि दक्षिणेनादाय, सव्येनान्वालभ्य 'ॐ अपहता असुरा रक्षांसि वेदिषद' इति मन्त्रेण कर्ष्वन्तर्दक्षिणाग्रां रेखामुल्लिखेत्पिञ्जूल्यग्रेण । अथ कर्ष्वाः पश्चिमतो हस्तौ कृत्वा 'एत पितर' इति नियच्छतेत्यन्तेन मन्त्रेण पितृनावाहयेत्(१)।

ततः पूर्वपूरितपात्रात्प्रथमं पात्रमादाय, पितृतीर्थेन कर्ष्वां उदग्देशे 'अमुकगोत्र पितः अमुकशर्मन् अवनेनिक्ष्व' ये चात्र त्वान्वित्युच्चार्यावनेजयेत् । तत उदकं स्पृष्ट्वा, कर्ष्वां मध्यदेशेऽग्रदेशे तत्तन्नामपूर्वकं पितामहप्रपितामहयोरवनेजनं कुर्यात् । ततः कांस्यपात्रतो दर्व्या पिण्डमादाय, अवनेजनदेशे तत्तन्नामपूर्वकमेष ते

---

(१) तत्र मन्त्रः—

एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः ।
दत्तास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥१॥

पिण्डो ये चात्रत्वान्वित्यादि स्वधान्तमुच्चार्य, पिण्डं दत्त्वा, अप उपस्पृश्यैवमपरयोः ।

ततः 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति' मन्त्रं जप्त्वा, अप्रदक्षिणमावृत्य, प्राणानायम्य, पितॄन्संस्मृत्य, श्वासविमोकात्पूर्वं अपर्यावर्त्तमानो जपेदमी मदन्त पितरो यथाभागमावृषायिषतेति। अथाञ्जलिकृतो जपति 'नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तेति' गृहावेक्षणम् । सदो वः पितरो देष्मेति पिण्डावेक्षणम् । 'एतद्वः पितरो वास' इति पिण्डत्रयेऽप्येकमेव सूत्रतन्तुसमर्पणम् ।

तत उदकपात्रमादाय उर्ज्जं वहन्तीरिति मन्त्रेण पिण्डोपरि धारां दद्यात् । ततश्चरुस्थाल्यादीनि पात्राणि प्रक्षाल्य, द्विशस्तेनैव मार्गेण प्रतिहारयेत् सव्येन । वामदेव्यं गायेत् । पिण्डप्रतिपत्तिः प्रागुक्ता कार्या । पत्नी पुत्रकामा चेदाधत्त पितर इति मन्त्रेण मध्यमं पिण्डं स्वे भोजनकाले प्राश्नीयात् ।(१)

इति पिण्डपितृयज्ञः ।

## अथ दर्शश्राद्धम् ।

तत्र श्राद्धपूर्वदिवसकृत्यम् । गृहसम्मार्जनोपलेपन-भाण्डशुद्धि-वस्त्रप्रक्षालन-नखलोमकर्त्तन—गात्रकेशमलापकर्षण—ब्रह्मचर्यैकभुक्तादि कार्यम् । दक्षिणाप्रवणादिगुणोपेतां भूमिञ्च कुर्यात् । एतावत्पूर्वेद्युः कृत्वा, तस्यां रात्रौ ब्राह्मणान्निमन्त्रयेत् ।

इति पूर्वदिनकृत्यम् ।

## अथ निमन्त्रणम् ।

सायङ्काले होमादिकं विधाय, स्वयं द्विजायतने गत्वा; कृता-

---

(१) मन्त्रो यथा-ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषः स्यात् ॥

अञ्जलिपुटः प्रणम्य, उदगग्रेषु कुशेषु ब्राह्मणौ प्राङ्मुखौ द्वावुपवेश्य, स्वयमुपवीतिना पातितदक्षिणजानुरुदङ्मुख उपविश्य, सयवहस्तस्तयोर्दक्षिणजानुनी स्पृशन्दैवे क्षणः क्रियतां 'करिष्याम' इति तैरुक्ते अक्रोधनैरिति नियमान् श्रावयेत्। ततो दक्षिणाग्रेषु कुशेषु उदङ्मुखान् त्रीन्ब्राह्मणानुपवेश्य, स्वयं कृतापसव्यः सव्यं जान्वाच्य, दक्षिणाभिमुख उपविश्य, तिलहस्तस्तेषां सव्यं जान्वालभ्य 'पित्रे क्षणः क्रियतां' 'करिष्याम' इति तैरुक्ते।

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा॥

इति नियमान् श्रावयेत्। एवमेव मातामहाद्यर्थे त्रीन्निमन्त्रयेत्। अशक्तावेकैकं सर्वत्र, वैश्वदेवं तन्त्रेण वा। ततो 'यथाविहितेन रात्रिर्यास्यति सर्वमेतत्करिष्याम' इति विप्रैरुक्ते कर्ता निमन्त्रिताश्च ब्रह्मचर्येण शयीरन्।

इति निमन्त्रणम्।

निमन्त्रणोत्तरमाज्यदोहानि त्रीणि सामानि पठनीयानि।

आज्यदोहसाम्नां प्रजापतिस्त्रिष्टुबग्निर्जपे विनियोगः।

२र २र ३ ४र५ २र १र २ १
ॐ हाउ। ३। आज्यदोहम्। ३। मूर्द्धानन्दायि। वा ३ अर।
२ ३ ४ ५ २र १र २ १ र २र ३ ४ ५ २ १
तिपृथिव्याः। वैश्वानराम्। ऋतआ। जातमग्नीम्। कविꣳ
२ १ २ ३ ४र ५ २र १ २
सम्रा। जा ३ मति। थिञ्जनानाम्। आसन्नः पा। त्रा ३
१ २ ३ ४ ५ २र २र ३ ४र ५ २र ३ ४
अन। यन्तदेवाः। हाउ। ३। आज्यदोहम्। २। आज्यदो५
२र २र १ २ २र २र १ ३ १ १ १ १
हाउ। वा। ए। आज्यदोहम्। २। ए। आज्यदोहा २३४५ म्॥१॥
२र १ २ १ २ २ १र
हाउ। ३। हुम्। चिदोहम्। ३। मूर्द्धान० पूर्ववत्।
२र १ २ १ २ १ ९ २ २ ३
हाउ। ३। हुम्। चिदोहम्। २। चिदो ३ हाउ। वा ३। ई

१ १ १ १
२३४२ ॥ २ ॥

२र १ २ २ १र २र
हाउ ३ । च्योहम् । ३ । भूर्द्धानन्दा० पूर्ववत् । हाउ । ३ ।
१ २ १ २ २ २ २ १
च्योहम् । २ । च्यो ३ हाउ । वा ३ । ए ३ । ऋतम् ॥ ३ ॥

एवं पठित्वा । ततः श्राद्धकाले समागतान्द्विजान्प्रत्युत्थानाभिवादनादिभिः सत्कृत्य, स्वागतमिति पृच्छेत्सुस्वागतमिति प्रत्युक्तिः । ततस्तेषां पादप्रक्षालनाय मण्डलद्वयं द्वारि कुर्यात् । उत्तरस्यां चतुरस्रं गोमयोदकाभ्यां उदक्प्लवं कार्यम् । दक्षिणस्यां वर्तुलं दक्षिणाप्रवणं कार्यम् । उत्तरमण्डले यवयुक्तान् पूर्वाग्रान् कुशान् संन्यस्य दक्षिणे सतिलान् दक्षिणाग्रान् संन्यसेत् । ततश्चतुरस्रमण्डले दैविकान्प्राङ्मुखान् , वर्तुलमण्डले पैतृकानुदङ्मुखानुपवेश्य पाद्यादिभिः पूजयेत् । तत्र पूर्वं दैविकान् स्वयं विप्रदक्षिणभागे उपवीतिना पातितदक्षिणजानुरुदङ्मुख उपविश्य, गन्धपुष्पाक्षतजलोपेतं अञ्जलिं देवतीर्थेन "पुरूरवार्द्रवनामानो विश्वेदेवा इदं वः पाद्यं" इत्युक्त्वा पादयोर्निनीयाभिवन्द्यान्येन जलेन पादौ प्रक्षालयेत् ।

ततः कांस्यपात्रे जलकुसुमाक्षतदधीनि निक्षिप्य एतद्वोऽर्घ्यमित्युक्त्वाऽञ्जलावर्घ्यं दद्यात् । ततः चन्दनेन दक्षिणाङ्गपूर्वकं पादजान्वंसमूर्द्धसु सम्पूज्य पुष्पैः पूजयेत् । तत एवमेव तदुत्तरतः उपविष्ट द्वितीयं पूजयेत् । ततः पैतृकान् पूजयेत् । ब्राह्मणानामग्रे प्राचीनावीती दक्षिणामुखः पातितवामजानुरुपविश्य, पूर्ववदञ्जलिमापूर्य, पितृतीर्थेन पृथग्ब्राह्मणपक्षे "अमुकगोत्रास्मत्पितरमुकशर्मन्नेतत्ते पाद्यं" इति पाद्यं दत्वा पादप्रक्षालनार्घ्यदानादि पूर्ववद्विधाय, वामाङ्गपूर्वकं मूर्द्धांसजानुपादेषु चन्दनादिना पूजयेत् । एकश्चेदमुकगोत्राः पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माण एतद्वः पाद्यमिति विशेषः । एवं मातामहादीनामपि

ब्राह्मणांस्तत्तन्नाम्ना समुदायेन वा पूजयेत् । ततः सर्वे द्विजाः स्वस्वमण्डलादुत्तरत उपविश्य द्विराचामेयुः । ततः कर्ता अन्यस्मिन्प्रदेशे द्विजचरणक्षालनोदकसंसर्गमकुर्वन्स्वपादौ प्रक्षाल्य, दर्भपाणिर्द्विराचम्य ब्राह्मणानग्रतः कृत्वा, तैः सह श्राद्धभूमिमागच्छेत्।

ततस्तेषामुपवेशनार्थमासनस्थापनम् । तत्र दैविकानामासनान्युदगग्राण्युदगग्रदर्भोपहितानि, पैतृकाणां दक्षिणाग्राणि दक्षिणाग्रदर्भोपहितानि प्राक्संस्थानि संन्यस्योपवेशयेत् । पूर्वं वैश्वदैविकान् । स्वयमुदङ्मुख उपवीती समुपविश्य, सव्यहस्तेनासनमालभ्य सयवेन दक्षिणेन निरङ्गुष्ठं द्विजहस्तमुपसङ्गृह्य, "ॐ भूर्भुवः स्वः समाध्वमित्युक्त्वा उपवेशयेत् । "ॐ समास्महे" इति प्रतिवचनम् । तत एवं द्वितीयमुपवेश्य पितृब्राह्मणानुपवेशयेत् । तत्र स्वयं दक्षिणमुखः प्राचीनावीती समुपविश्य, सव्येनासनमालभ्य, सतिलेन दक्षिणेन निरङ्गुष्ठद्विजहस्तमुपसङ्गृह्य मन्त्रेणोपवेशयेत् । तथैव प्रतिवचनम् । एवं उपवेश्य स्वयमाचम्य श्राद्धमारभेत् ।

तत्र द्विजासनसमीपे प्रत्यासनं श्राद्धसमाप्तिपर्यन्तं स्थायिनो दीपान्देवानां प्राङ्मुखान्; पितॄणामुदङ्मुखान साधारान्स्थापयेत् । असम्भवे एकैकं वा । अत्र श्राद्धारम्भादारभ्य समाप्तिपर्यन्तं देवपरिचर्यां सव्येन उदङ्मुखः पातितदक्षिणजानुर्द्विजदक्षिणभाग उपविष्टो ऋजुकुशैः सयवैः कुर्यात् । पितृपरिचर्यायां द्विजाग्रतो दक्षिणामुखः प्राचीनावीती पातितवामजानुरुपविष्टः सतिलैर्द्विगुणदर्भैः कुर्यात् ।

श्राद्धप्रारम्भनिमित्तं समाचाराद्विष्णोः पञ्चोपचारैः पूजनम् । ततः प्राणानायम्य गायत्रीं अगायत्रां पठित्वा(१) इदं विष्णुरिति मन्त्रेण देवाग्रतो यवान्विकीर्य्य (२)अपहता इति मन्त्रेण पित्रग्रतस्तिलान्विकिरेत्(३) । ततः प्राचीनावीती दक्षिणाभिमुख उपविश्य, समाचात् अग्निष्वात्तादिभिर्मन्त्रैर्द्विगुण-सतिलकुशप्रक्षेपेण

(१) पृष्ठ १६ । (२) पृष्ठ ५८ । (३) पृष्ठ ११ टिप्पण्याम ।

दिशो बध्वा (१)रक्षोभूतादिभिर्मन्त्रैस्तिलसर्षपकुशाक्षतप्रक्षेपेण द्वारबन्धनं कृत्वा(२) सव्येन समाचारात् "श्राद्धभूमौ" "सप्तव्याधेति" पठित्वा "देवताभ्यः पितृभ्यश्चेति" पठेत्(३)। ततस्ताम्रपात्रे शुद्धोदकमापूर्य, चन्दनपुष्पाक्षतांस्तत्र निक्षिप्य, कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं सञ्जप्य, द्विगुणीकृतैः पितृतीर्थगतैः कुशैरप्रदक्षिणं जलमालोडयन्नेतोन्विन्द्रं इति त्रिऋचं पठित्वा (४)अपसव्येन

---

( १ ) तत्र मन्त्रः—

ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।
तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ १ ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
ऊर्ध्वंस्त्वर्यमा रक्षेत्कव्यवालनलोऽप्यधः ॥ २ ॥

( २ ) रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।
सर्वतश्चाधिपस्थेशो यमो रक्षां करोतु मे ॥ १ ॥
यवाश्च रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान् ।
पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥ २ ॥

( ३ ) ॐ श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते ॥ १ ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥ २ ॥
ॐ सप्त व्याधा दशार्णेषु मृगाः कालिञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ ३ ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ ॥ ४ ॥
ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव भवन्तु ते ॥ ५ ॥
( देवताभ्य इति मन्त्रं वारत्रयं पठेत् )

( ४ ) निरस्त्रिरिन्द्रोऽनुष्टुबिन्द्रः पाकप्रोक्षणाय जलाभिमन्त्रणे वि-
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
नियोगः । ॐ एतो न्विन्द्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना । शुद्धै
३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ २ ३ १ २
रुक्थैर्वावृध्वाꣳसꣳ शुद्धैराशीर्वान्ममत्तु ॥ १ ॥ इन्द्रः शुद्धो न आगहि

कुशाग्रगृहीताभिरद्भिरुपयोगक्रमेण श्राद्धसामग्रीं सम्प्रोक्ष्य, बद्धाञ्जलिर्द्विजान्प्रार्थयेत् । "भवतां प्रसादात् श्राद्धोपहाराणां पाकादीनां पवित्रताऽस्तु" । अस्तु इति प्रत्युक्तिः । "देशकालपाकपात्रद्रव्यश्रद्धासम्पदस्तु" । अस्त्विति द्विजाः । ततो देशकालादि सङ्कीर्त्यामुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां, अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां एषां अद्य अमावास्यानिमित्तं पार्वणद्वयविश्वेदेवापूर्वकं अर्घपिण्डसहितं भवदनुज्ञया श्राद्धमहं करिष्ये, इति वदेत् । "कुरुष्व" इति तैर्वाच्यम् ।

तत आसनदानम् । द्विजदक्षिणभागे यथावदुपविश्य, यवजलसहितं दर्भयुग्मं ऋज्वेवादाय, स्ववामेन तस्य दक्षिणहस्तमुत्तानं धृत्वा "पूरूरवार्द्रवनामभ्यो विश्वेभ्यो देवेभ्य इदमासनं स्वाहेति" द्विजहस्ते तदुदकमासिच्यासनदक्षिणभागस्योपरि देवतीर्थेन तद्दर्भयुग्मं उदगग्रं क्षिपेत् । स्वासनमस्त्विति द्विजप्रत्युक्तिः । ततः पुनर्द्विजहस्ते हस्तप्रक्षालनार्थं जलं दत्वा "उपग्रहविग्रहार्था य इमे कुशा" इत्युक्त्वा कुशान्दद्यादेवं द्वितीयदैविकद्विजायासनं दत्वा पितृभ्य आसनं दद्यात् ।

उक्तविधिना पितृब्राह्मणाग्रे समुपविश्य तिलजलसहितं दर्भत्रयं द्विगुणमादाय, स्ववामेन तस्य हस्तं धृत्वा "अमुकगोत्रायास्मत्पित्रे वसुरूपायामुकशर्मणे इदमासनं स्वधेति" पितृतीर्थेन हस्ते जलमासिच्यासनवामभागे तद्दर्भत्रयं द्विगुणं पितृतीर्थेन दक्षिणाग्रं प्रक्षिपे-

---

२ २ ३ १ २ २ १ २ ३ २ ३ १— २र ३ १ २
शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्य ॥२॥
१ २ ३ १— २र २ २ ३ १— २र ३ १ २ ३ २ ३ १ २
इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे
३ १— २र
शुद्धो वाजाँ सि शासि ॥ ३ ॥

